**नमः कात्यायनाय**

*****



नमोनमोऽस्तु शब्दाय वार्त्तिकाऽमलमूर्तये ।

श्रुतधराय शान्ताय कात्यायनाय योगिने ॥

संस्कृतव्याकरण-वाङ्मये कात्यायनः वार्तिककाररूपेण परिचयं प्राप्तः। असौ महात्मा महान् वैयाकरण आसीत् । अस्य "वररुचिः" इति नामान्तरमासीत् । महाराज-समुद्रगुप्तेन कृष्णचरित्र- काव्ये मुनिकवि-वर्णनप्रसंगे अभाणि। "यः स्वर्गारोहणं कृत्वा स्वर्गमानीतवान् भुवि । काव्येन रुचिरेणैव ख्यातो वररुचिः कविः ॥ न केवलं व्याकरणं पुपोष दाक्षीसुतस्येरितवार्तिकैर्यः । काव्येऽपि भूयोऽनु चकार तं वै कात्यायनोऽसौ कविकर्मदक्षः ॥" इति स्वर्गारोहणकाव्यकर्तुरस्य वार्तिककारस्य वररुचेश्च नानाश्लोकाः वैद्यकीये शाङ्र्गधरपद्धत्यां, सदुक्तिकर्णामृते एवं सुभाषितमुक्तावल्यादिग्रन्थेषु समुपलभ्यन्ते । क्वासौ कात्यायन इत्यस्मिन् विषये जिज्ञासा जायते । कात्यायनशब्दो वस्तुतो गोत्रप्रत्ययान्तः सिध्यति । स्कन्दपुराणे एको याज्ञवल्क्य-पुत्रः कात्यायन आसीत् । तत्पुत्रो वररुचिः । स च विश्वामित्रवंशजो यज्ञविद्यायाः विलक्षणस्तथा श्रौत-गृह्य-शुल्यसूत्रादीनां प्रणेता आसीत् । सोऽपि शुक्ल-यजुर्वेदस्य आंगिरसायनस्य वा कात्यायनशाखायाः प्रवर्तकः याज्ञवल्क्यस्य पौत्रत्वेन निरूपितः ,यस्य समयः ख्री०पू०चतुर्थशताब्दी तृतीयशताब्दी वा मन्यते । महाभाष्ये- "प्रियतद्धिता दाक्षिणात्याः" (१/१/३) इति अनेन वाक्येन सः दाक्षिणात्य इति वक्तुं शक्यते । अन्यत्र एको गोभिलपुत्रः कात्यायनो यः छान्दोग्यपरिशिष्टस्य कर्ता एव । अपरः प्राकृतप्रकाशकारः वररुचिर्यो वासवदत्तायाः रचनाकारस्य सुबन्धोः मातुलः षष्ठशताब्दीय आसीत् । अन्येषु कात्यायनेषु एकः कौशिकगोत्रियः, अपरः आंगिरसगोत्रियः, अन्यश्च भार्गवगोत्रियः, आसीत् । किन्तु वार्तिककारः कात्यायनः कात्यगोत्रिय कत्य-ऋषे अपत्यः ख्री०पू० पञ्चमशताब्दीय इति केचन द्रढयन्ति । अन्यत्र दृश्यते महर्षेः कात्यायनस्य कठोर-तपसा सन्तुष्टा सती स्वयमादिमाता भगवती तद्वंशे कन्यारूपेण समुत्पन्ना बभूव । कालान्तरे सा महिषासुरस्य विनाशं कृतवती । पुनः अन्य- मतानुसारं कात्यायनः दाक्षिणात्य-निवासी तथा पाणिनेः साक्षात् शिष्य आसीदिति । एतद्विषये महती शंका वर्तते । कथासरित्सागरे सोमदेवभट्ट-मतानुसारं कात्यायनः कौशाम्ब्याः निवासी अभूत् । तस्य पिता सोमदत्तः माता च वसुदत्ता आस्ताम् । पूर्वजन्मनि स पुष्पदन्तनामा गन्धर्वो बभूव । माहेश्वरीशापात् मर्त्यभूमौ मानवरूपेण वररुचिनाम्ना जातः , यः खलु वर्षस्य शिष्य आसीत् । पाणिनिरपि वररुचेः गुरुभ्राता एव । यच्चोक्तं- "प्रणिधानादथ ज्ञात्वा जगादैवमुमापतिः । योगी भूत्वा प्रविश्येदं पुष्पदन्तस्तदाशृणोत् ॥ जयायै वर्णितं तेन कोऽन्यो जानाति हि प्रिये । श्रुत्वेत्यानाययद्देवी पुष्पदन्तमतिक्रुधा ॥ मर्त्यो भवाविनीतेति विह्वलं तं शशाप सा" ---। इति नन्दि-विरोधसत्त्वेऽपि शिव-पार्वतीसम्बादं गुप्तभावेन योगबलेन पुष्पदन्तः श्रुतवान् । एतस्मात्कारणात् पार्वती तं

शशाप । स्कन्द-पुराणानुसारं पुरा याज्ञवल्क्यस्याश्रमः आनर्तेषु-(अधुना गुजुरात इतिख्यातेषु) आसीत् । पश्चात्तस्मिन् मिथिलां गते तत्पुत्रः कात्यायनः महाराष्ट्रान् प्रति प्रस्थितः । यदि वार्तिककारस्य कात्यायनस्य पौत्रोऽभूत्तर्हि पाणिन्युत्तरवर्त्ती ज्ञायते, यदि पाणिनेः साक्षात् शिष्यस्तर्हि तस्य समकालीन एव ज्ञायते , इति महान् विवादस्य विषयः । वस्तुस्थितिदर्शनेन कात्यायनः पाणिनेः पूर्ववर्त्तीति निश्चेतुं शक्यते । संप्रति वररुचिप्रणीत-वार्त्तिकविषये संक्षेपत आलोच्यतेऽत्र । तत्र

वार्त्तिकं नाम वृत्तिर्ग्रन्थसूत्रविवृतिः । तत्तु स्वतन्त्रतया नोपलभ्यते । वार्त्तिकस्वरूपं तु- "उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते । तं ग्रन्थं वार्त्तिकं प्राहुर्वार्त्तिकज्ञाः मनीषिणः" ॥ वृत्तिः+कथादिभ्यः ठक् । उक्तानुक्तदुरुक्तार्थव्यक्तीकारकग्रन्थ विशेषो वार्त्तिकम् । यद्वा यत्र प्रागुक्त-अनुक्त-दुरुक्तादिविषयाणां विचारः प्रस्तूयते तद् वार्त्तिकमिति ख्यातम् । हेमचन्द्रेणापि हेमशब्दानुशासने "उक्तानुक्तदुरुक्तानां व्यतिकारि तु वार्त्तिकम्" उक्तम् । राजशेखरकृत-काव्यमीमांसायां च "उक्तानुक्तदुरुक्तचिन्ता वार्त्तिकमि"ति समर्थितम् । नागेशाचार्याः तत्कृत-उद्द्योतटीकायां "उक्तानुक्तदुरुक्तचिन्ताकरत्वं" वार्त्तिकत्वमाहुः । अनेन स्पष्टं प्रमाणीक्रियते यत् पाणिनिसूत्रेषु सम्भावित-त्रिदोषपरिहाराय वररुचिना भगवता वार्त्तिकं प्रणीतम् । वार्त्तिकानां संख्यानिर्द्धारणे न कोऽपि समर्थः, यतोहि भाष्यकारेण बहूनां वार्तिककाराणां मतानि नामानि च संगृहीतानि । यद्भवतु कात्यायनस्य वार्त्तिकं पाणिनीयव्याकरणस्य महत्त्वपूर्णमंगम् । वार्त्तिकं विना पाणिनीय-व्याकरणमसंपूर्णमेव । अत्याधुनिका वैयाकरणाः वररुचेः प्रथम-वार्त्तिकं "सिद्धे शब्दार्थसम्बधे" प्राचीनाः "रक्षोहागमलध्वसंन्देहाः प्रयोजनम्" वा गृहीत्वा भगवता पतञ्जलिना महाभाष्यारम्भो विहितः इति स्वीकुर्वन्ति । सायणाचार्येण ऋग्वेदभाष्यभूमिकायां व्याकरणस्य प्रयोजनसम्बन्धे- "तस्यैतस्य व्याकरणस्य प्रयोजनविशेषो वररुचिना वार्त्तिके दर्शितः "रक्षोहागमलध्वसंन्देहाः प्रयोजनम्" इति उक्तम् । "एतानि रक्षादीनि प्रयोजनानि प्रयोजनान्तराणि च महाभाष्ये पतञ्जलिना स्पष्टीकृतानि" । इति ।

कात्यायनः वस्तुतः पाणिनेः न दोषद्रष्टा किन्तु समालोचक एवासीत् । पाणिनीयसूत्राणामपूर्णतामाकलय्य अत्यावश्यकरूपेण तेन वार्त्तिकानां निर्माणं विहितम् । कुत्रापि पाणिनिं बोद्धुमसमर्थेन सता प्रतिकूल-मन्तव्यं विहितं तेन । पश्चात् भाष्यकारः वररुचिमतं खण्डयित्वा पाणिनिं समर्थितवान् । कात्यायनविषयेऽत्र मया दिङ्मात्रं प्रदर्शितम् । अलमति विस्तरेण । शम् ।

नन्दप्रदीप्तकुमारः